

गङ्गाधरकविरचितः

# लीलावतीसन्देशः


प्रधानसम्पादिका

विदुषी. डा. प्रा. एच्.पि. देवकी एम्.ए., पिएच्.डि.

निर्देशिका, प्राच्यविद्यासंशोधनालयः

सम्पादिका :

डा. बि. ममता एम्.ए., पिएच्.डि.

सहायकसंशोधिका, श्रेणी-1



प्राच्यविद्यासंशोधनालयः





मैसूरु विश्वविद्यानिलयः, मैसूरु-570005

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES NO.209

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला-२०९

# LĪLĀVATĪSANDEŚA
of
# GAṄGĀDHARAKAVI

गङ्गाधरकविरचितः

# लीलावतीसन्देशः

ORIENTAL RESEARCH INSTITUTE
MYSURU
प्राच्यविद्यासंशोधनालयः
मैसूरु
२०१६

First Edition : 2016

Copy Right : Oriental Research Institute, Mysore

Copies : 1000

Price : Rs. 65

Published by : The Director
Oriental Research Institute
University of Mysore, Mysuru-570 005

Printed at : Vani Press
# 1098/4, Geetha Road,
Chamarajapuram, Mysuru-570005

गङ्गाधरकविरचितः

# लीलावतीसन्देशः

प्रधानसम्पादिका :

**विदुषी. डा. प्रा. एच्.पि. देवकी** एम्.ए., पिहेच्.डि.

निर्देशिका, प्राच्यविद्यासंशोधनालयः

निवृत्तप्राध्यापिका, स्नातकोत्तरसंस्कृताध्ययनविभागः

मानसगङ्गोत्री, मैसूरुविश्वविद्यानिलयः, मैसूरु

**प्राच्यविद्यासंशोधनालयः**

मैसूरु

२०१६

# LĪLĀVATĪSANDEŚA

of

## GAṄGĀDHARAKAVI

*General Editor :*

**Vidushi : Prof. Dr. H.P. DEVAKI** M.A., Ph.D.
Director, Oriental Research Institute
University of Mysore, Mysuru
Retired Professor
Department of Studies in Sanskrit
Manasagangothri, Mysuru

**ORIENTAL RESEARCH INSTITUTE**
**MYSURU**
**2016**

प्राच्यविद्यासंशोधनालयग्रन्थमाला-२०९

गङ्गाधरकविरचितः

# लीलावतीसन्देशः

सम्पादिका :
दि ।। डा. बि.ममता एम्.ए., पिहेच्.डि.
संशोधनसहायिका
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः
मैसूरु
२०१६

ORIENTAL RESEARCH INSTITUTE SERIES NO.209

# LĪLĀVATĪSANDEŚA

of

## GAṄGĀDHARAKAVI

*Editor :*

**Late Dr. B. MAMATHA** M.A., Ph.D.
Research Assistant
Oriental Research Institute
Mysore

**ORIENTAL RESEARCH INSTITUTE**
**MYSURU**
**2016**

# FOREWORD

The present work 'Līlāvatī-sandeśa' belongs to the category of 'messenger poem' (sandeśa or dūta kāvya) in Sanskrit literature. Dr. B.Mamatha, who was working in the 'Oriental Research Institute' has brought out the critically edited text of Līlāvatī-sandeśa 'with footnotes, collating two manuscripts of the text. For this purpose, she has done a comparative study of manuscripts bearing the numbers P.3786 and B.1058, preserved in the Oriental Research Institute. Līlāvatī-sandeśa bears the serial number 209 among the publications of this institute which is devoted to the research and publications of rare Sanskrit works written on palm leaf and paper manuscripts. The theme of Līlāvatī-sandeśa is the plight of a bereaved gopika (coward damsel) by name Līlāvatī and her appeal to Kṛṣṇa, through a confidential friend 'by name 'Medhāvini'. The significance of this work is in the 'champū-style' a mixture of prose and poetry adopted by the poet.

The roots of 'Sandeśa-kāvyas' in Sanskrit literature may be traced back in the earlier literary sources like

Ṛgveda, Purāṇas, Rāmāyaṇa and Mahābhārata etc. In Ṛgveda (X.108) Saramā who is a celestial dog was deputed as a messenger of Indra to Panis. Where as in the Rāmāyaṇa, Hanumān was the messenger between Rāma and Sītādevi. In the great epic Mahābhārata, Kṛṣṇa was the messenger of Yudhiṣṭhira. In the Nalopākhyāna which is a part of this great epic, a swan is the messenger. In the history of Sanskrit literature the first attempt to bring out such a messege-theme as the main flow of the poem is made by Kālidāsa. His Megha-dūtam is the first and most famous sandeśa-kāvya written in 'mandākrānta-metre' most suitable for 'Vipralambha-ṣṛngāra'. So far, there are more than seventy 'dūta-kāvyas' in Sanskrit literature and most of them focus on the separated hero and heroine of epics, particularly the Rāmāyaṇa, Mahābhārata. Some of the poets focus on the stories of Kṛṣṇa in the Bhāgavata Purāṇa.

Generally, these 'dūta-kāvyas' are short lyric poems with peculiar charm. The poets tend to depict the condition of two separated lovers and the employment of a messenger and the message, and a marvelous description of the route to be travelled. Most of the poems are between 100-200 verses. But rarely in works like

'Pārśvābhyudaya' of Jinasena, the number of verses exeed more than 300 although some are as little as only having 22 like Ghatakarpara. Līlāvatī-sandeśa is written in 'champū style' but with only seventeen verses and some prose portions written in excellent Pāñcālī-style. The verses are composed in different meters like Śārdūlavikrīḍitam, Mālinī, Svāgata, Vasantatilakā and Gīti metre. The theme is based upon stories of Kṛṣṇa from Bhāgavata-purāṇa. The heroine Līlāvatī who spent her entire child-hood playing with Kṛṣṇa in Brindāvan has attained fresh youth and extraordinary graceful-ness. Kṛṣṇa who has spent his childhood with her has returned back to his parents. Līlāvatī's love becomes intenser for Kṛṣṇa who has gone back. She decides to give him a message through her intimate friend Medhāvini.

The poet of Līlāvatī-sandeśa does not mention his name throughout the work. But on the basis of its similarities with 'Madhurosṭhi-sandeśa' and 'Madra-kanyā-pariṇaya-champū' authored by Gaṅgādhara-kavi, it is presumed that Līlāvatī-sandeśa has been authored by the same poet. In the colophone of 'Madrakanyā-pariṇaya-champū' he provides his identity only as the son of a learned pundit by name Dattātreya.

But remains silent pertaining to the period and other details of his family.

The present work is the only messenger poem written in campū style among the dūta-kāvyas traced so far in the galaxy of Sanskrit literature. The editor Late Dr. B.Mamatha has given a brief introduction of the work in simple and flawless Sanskrit language. The work will be a good reference work for the lovers of Knowledge and especially for those interested in Sanskrit literature.

I sincerely thank Dr.K.S.Rangappa, Vice-chancellor of the University of Mysore for his constant encouragement and cooperation in the academic progress of 125 year old Oriental Research Institute. I am also thankful to the Registrar and Finance Officer, University of Mysore for their encouragement in bringing about this book.

My thanks are due to the Director, Prasaranga, University of Mysore for his suggestions and timely help. The neat appearance of the text is due to the efficiency of Vani Press, Chamarajapuram, Mysuru and I am thankful to the propriter of this printing press.

27-09-2016

**Dr(Mrs) H.P.Devaki**
Director
Oriental Research Institute
University of Mysore, Mysuru

# उपोद्घातः

भारतीयसाहित्यनिकुरम्बके संस्कृतसाहित्यं प्राचीनतमम् । अस्य आदिमभाग एव वैदिकवाङ्मयः । अस्य भाषा यद्यपि संस्कृतमेव तथापीदं रचनोच्चारणव्याकरणप्रक्रियाभिः काव्यभाषाया भिन्नम् । स्फुटनिर्देशनार्थं वैदिकसंस्कृतमिति अथवा वेदभाषेति तथैव पाणिनेः उत्तरकालिकां भाषां काव्यस्थसंस्कृतम् अथवा लौकिकसंस्कृतमिति च वाङ्मयमिदं समाह्वयन्ति । वैदिकसंस्कृतं कालक्रमेण प्रवर्धमानं सत् काव्यसंस्कृतरूपेण परिणामम् अभजत इति तु सुस्पष्टम् ।

भारतीयसाहित्यसौधस्याधारशिला वैदिकसाहित्यम् एवेत्ययं सिद्धान्तः। भारतीयसाहित्यचरितस्य प्रारम्भश्च वैदिकवाङ्मयेन साकं भवति । अग्रे जनितं सर्वं धार्मिकं तथा लौकिकसाहित्यं प्रत्यक्षेण अथवा परोक्षरूपेणास्मिन् साहित्यक्षेत्रे सम्बद्धमभवत् ।

वैदिकसाहित्यं वेदैः आरण्यकैरुपनिषद्भिः प्रत्यक्षरूपेण प्रावर्धत । इतिहासपुराणादिभिः परोक्षेण वृद्धिमभजत । तथा लौकिकसाहित्यं तु महाकाव्य-लघुकाव्य-गद्यकाव्य- चम्पूकाव्यैतिहासिककाव्यनाटकानीति नैकरीत्या समृद्धं परिदृश्यते । इदानीमपि प्रवर्धमानमेवास्ति ।

संस्कृतसाहित्ये लौकिककाव्यरचना कदा प्रारभत इति निश्चयेन वक्तुं न शक्यते । ऋग्वेदादिषु लौकिसंस्कृतकाव्यानां विषयीभूतः वस्तुसमूहः यद्यपि तत्र तत्र उपलब्धोऽस्ति तथापि काव्यस्वरूपं तथा लक्षणं विशिष्टतया

न ज्ञायते । "कवेः कर्म काव्यम्" इति काव्यं स्थूलरूपेण विवेचितमस्ति । संस्कृतसाहित्ये अर्थवच्छब्दार्थयुगलं काव्यमिति वदन्तः आलङ्कारिकाः सन्ति। एतद्भिन्नलक्षणप्रतिपादकाः अपि बहवः सन्ति । परन्तु नास्माकमयं समयः काव्यलक्षणप्रतिपादनस्य । अतः प्रकृतमनुसृत्य किञ्चित् प्रस्तूयते ।

श्रव्यदृश्यमिश्रेत्याख्यया काव्यं त्रिविधम् । रघुवंशादीनी श्रव्यकाव्यानि। शाकुन्तलादीनि नाटकानि रूपकसमूहो वा दृश्यकाव्यानि । गद्यपद्यैः सम्मिश्रं काव्यमेव चम्पूः । सा च मिश्रकाव्यनाम्ना कथ्यते । भारतचम्पूः रामायण-चम्पूः इत्याद्याः तस्योदाहरणानि । श्रव्यकाव्यस्य लघुकाव्यमेकः प्रभेदः । सन्देशकाव्यं तत्प्रभेदान्तर्गतमेव ।

**सन्देशकाव्यम् :**

संस्कृतसाहित्ये महाकाव्यवदेव अथवा बहुत्र तदपेक्षयापि चित्ता-कर्षकाणि अनेकानि लघुकाव्यानि सन्ति । इमानि बाह्याकारे लघुरूपेण दृश्यमानान्यपि रसवत्तया बृहन्त्येव । एषु कानिचित् काव्यानि भावगीतं, भक्तिगीतम् इत्यादीनि अन्यानि च नीत्युपदेशात्मककाव्यानि प्रणयगीतानि च । इमानि प्रत्येकमपि स्वकीयेनैव वैशिष्ट्येनातीवाह्लादकारीणि भवन्ति। श्रृङ्गारगीतानि नैकविधानि भवन्ति । एषु सन्देशरूपाणि काव्यानि नितराम् आस्वादनीयानि भवन्ति । प्रायोऽत्र विरही प्रियः स्वप्रेयस्यै सन्दर्भमनुदृश्यमानदूतमुखादेकं सन्देशं प्रेषयति । प्रेयस्यपि कस्मिंश्चित् सन्दर्भे सन्देशं प्रेषयति । अयं सन्देशः प्रेयसीप्रियतमयोः विश्लेषजन्यां हृदयवेदनां बहुसुन्दरतया वर्णयति। वस्तुनो दृष्ट्या सरलसन्दर्भ एव आद्रियते कविभिः ।

सन्देशकाव्येषु कालिदासस्य मेघसन्देश एव परमोत्कृष्टः । अस्य 'मेघदूतम्' इति अपरं नामाप्यस्ति । उत्तरकालिककविषु मेघसन्देशस्य

प्रभावः अपारः अस्ति । आकारेण तथा वस्तुना अपि आधुनिककवयः तं मेघसन्देशम् आदर्शमिव भावयन्ति । अनेके कवयश्च तस्य सन्देशकाव्यस्य द्वित्रान् किमुत अनेकानेव श्लोकान् स्वकाव्येषु यथावत् स्वप्रबन्धभाषया अन्ववोचन् । जिनसेनेन (क्रि.श. 814) स्वकीये 'पार्श्वाभ्युदय' काव्ये मेघदूतश्लोकभागानेव समस्यापूरणरूपेण स्वीकृत्य स्वकीयकाव्यवस्तुवर्णनं संयोजितमस्ति । अज्ञातकालो विक्रमनामा कविः स्वकाव्ये 'नेमिदूते' मेघदूतस्य पञ्चविंशत्युत्तरशतश्लोकाणां सङ्कलनं अकरोत् । पुनः केचन कवयः मेघदूतस्यैव आधारेण परन्तु वस्तुमात्रं भिन्नं स्वीकृत्य अनेकानि सन्देशकाव्यानि व्यरचयन् । वङ्गदेशाधिपतेः लक्ष्मणसेनस्य राज्ञः आस्थानकविः धोयि नामा कविः 'पवनदूतम्' नाम गीतिकाव्यं व्यरचयन् । अस्मिन् काव्ये गन्धर्वकन्यया कुवलयवत्या लक्ष्मणसेनाय प्रेषितः सन्देशः निरूपितः अस्ति। कवितार्किकसिंहेन वेदान्तदेशिकेन (क्रि.श. 1268-1369) मेघसन्देशस्य शैल्यामेव 'हंससन्देश' इति काव्यं रचितमस्ति । सीतामन्विष्य लङ्कानगरात् हनूमतः प्रत्यागमनानन्तरं श्रीरामः सीतादेव्यै हंसद्वारा स्वान्तरङ्गदर्पणसच्छायं सन्देशं प्रैषयदित्येव अस्य काव्यस्य वस्तु । अस्मिन् प्रेम्णोऽप्यधिकं भक्तेः अध्यात्मविषयस्य च स्थानं विशिष्टम् । 1400 तमे क्रि.शके उद्दण्डेन कविना 'कोकिलसन्देशः', उदयेन 'मयूरसन्देशः' तथा वामनभट्टबाणेन 'हंससन्देशः' इति प्रबन्धाः रचिताः । क्रि.श. 1500 तमे वत्सरे कृष्णचैतन्यस्य शिष्यः रूपगोस्वामी भक्तिप्रधानं 'हंससन्देशम्' तथा 'उद्धवसन्देशम्' इति सन्देशकाव्यद्वयं रचयामास । मेघसन्देशस्य व्याख्याकारः पूर्णसरस्वती स्वकीयहंससन्देशकाव्ये, काञ्चीनगर्यां स्थिता एका प्रेयसी बृन्दावने स्थितं कृष्णं प्रति आवेदनं प्रेषयामास इति भावात्मकं वस्तु स्वीकृत्य काव्यं व्यरचयत्। अस्य काव्यस्य प्रभावेण परमेश्वर नामा कविः 'चकोरसन्देशम्' काव्यं

व्यलिखत् । क्रि.श. 1705 तमे संवत्सरे शतावधानी कृष्णदेवकविः स्वकीये 'भृङ्गदूते' काव्ये एकया गोप्या कृष्णं प्रति प्रेषितं स्वविरहनिवेदनं वर्णितवान् । 19 तमे मैसूरुनगरस्थो रामशास्त्री नाम आस्थानमहाकविः 'मेघप्रतिसन्देशः' इति मेघदूतोरत्तरूपं काव्यं विरचय्य यक्षपत्न्या अलकानगरात् स्वप्रियं प्रति प्रेषितसन्देशस्य प्रत्युत्तरप्रेषणविषयं निरूपितवान् । विष्णुत्रातः 'कोकसन्देशम्', वासुदेव इति अन्यः 'भृङ्गसन्देशः' च व्यरचयताम् । केचन सन्देशकाव्यकर्तारः स्वकृतीः भिन्नभिन्नछन्दस्सु रचयित्वा प्रख्याताः अभवन्। मालिनीवृत्तेन चन्द्रदूतकाव्यस्य रचयिता विनयप्रभुः, वसन्ततिलकया मनोदूतस्य निर्माता विष्णुदासः, शिखरिणीवृत्तेन मनोदूतस्य निरूपकः रामरामोऽपि विविधवृत्तेषु काव्यानि निर्माय प्रख्याता बभूवुः । एवमेव इदम्प्रथमतया लोचनगोचरीभूतं लीलावतीसन्देश इति काव्यं सन्देशकाव्यमध्ये रसभूयिष्ठम् ।

**लीलावतीसन्देशः :**

सत्स्वपि बहुषु पद्येषु लीलावतीसन्देशकाव्यं पद्यकाव्यमिति न वक्तुं शक्यते यतः, तस्मिन् गद्यभागोऽपि बहुभागावृत अस्ति । गद्यबाहुल्यात् गद्यकाव्यमित्यपि वक्तुं न शक्यते । अतः गद्यपद्ययोः सम्मिश्रणरूपं चम्पूकाव्यमित्येव वक्तुं शक्येत । सन्देशरूपवस्तुनि साम्यमवाप्यापि रूपे विभिन्नतां प्रदर्शयन् इतरसन्देशकाव्येभ्यः भिन्नरीत्या लीलावतीसन्देशकाव्यं कविः रचयामास । प्रायः सर्वाणि सन्देशकाव्यानि पद्यात्मकान्येव । परन्तु लीलावतीसन्देशकाव्यस्य कर्ता गद्यपद्ययोः सम्मिश्रणेन नूतनमेव काव्यरूपं व्यरचयत् । अतोऽत्र इदं काव्यं श्लाघ्यपदमधिष्ठातुं सुयोग्यं भवति ।

### लीलावतीसन्देशस्य विषयः :

लीलावतीनाम्न्या गोप्या कृष्णं प्रति स्वसखीद्वारा सन्देशप्रेषणविषय एव अस्य काव्यस्य कथावस्तु । प्रौढिमानमारूढा सा विरहिणी कृष्णविरहमसहमाना तस्मै सन्देशद्वारा स्वान्तरङ्गं बहिरकरोत् । सा चैवं सन्दिशति हे कृष्ण ! अहं लीलावती इति बाल्यादेव त्वयि अनुरक्ता । व्रजं विहाय तव गमनानन्तरं क्षेमम् आपृच्छ्य प्रेषितं सरसम् इमं सन्देशम् आदरात् स्वीकुरु इति स्वसन्देशवाचमारभते ।

पुरा स्वयं कृष्णेन साकं बाल्यक्रीडाः कृतवती । तदनन्तरं भवान-स्मात्प्रदेशान्निर्गतः । इदानीम् अहम् अतिशयलावण्यवती अभवम् । मया साकं क्रीडन्तीषु सखीषु एका वयसि वचसि ज्येष्ठा मेधाविनी नाम्नी सखी मां निरुपमलावण्यवतीं सौन्दर्यखनिमिव झटिति सम्भूतां विभाव्य क्व इयं देवकन्यकायाः रूपसम्पदिति मां साकूतं वर्णयन्ती अयि तरले ! तारुण्यविलासैः युक्ताऽसि । इदं रूपलावण्यं कृष्णस्य करतलस्पर्शेन जनि-तम् । अतोऽत्र विषये आश्चर्यं न पश्यामि । चन्द्रं विना चन्द्रिकेव, मेघां विना विद्युदिव, शङ्करजटाजूटं विना चन्द्रलेखेव, मलयपर्वतं विना चन्दनमिव, कृष्णं विना न त्वं शोभसे । अन्यः कोऽपि प्राप्तुं, द्रष्टुमपि त्वया न शक्यः। इत्थं सा लीलावती सख्याः वाचः कृष्णं प्रति निवेदयति । तथा च मेधाविनी एव स्वप्रेयसः कृष्णस्य प्राप्त्यर्थं कुशला इति तस्याः गुणान् गायति । कविः अनन्तरं रसपोषकतया यमुनानदीतीरवनीं वर्णयति । अन्ते च पुरा त्वं बहुप्रलोभनयुक्ता वाचः मुग्धायाः मम समीपे उक्त्वा मां वञ्चयित्वा गतोऽसि । परन्तु भार्याद्वयमेव स्वीकृत्यापि एकां स्वकीयार्धाङ्गे विनिवेशित-वान् । भवान् गोपसुताकान्तः अत एव मां विस्मृतवान् । एतत्तु साध्वेव। न त्वत्र आश्चर्यं पश्यामि । तथापि करुणासागरः त्वं आत्मनः पादयोः

आदरणीयाम् इमां दासीं सुखय इत्यन्तरङ्गदुःखिता आत्मनः हृदयान्तरालं सन्देशं समापयति ।

लीलावतीसन्देशस्य शैलीपरिशीलनेन बाणभट्टस्य कादम्बरी स्मृतिपथमागच्छति । तस्यामिवात्रापि दीर्घदीर्घो वर्णनाभागः, कोमलपदपुञ्जानां सुसङ्घटनं च दृश्यते । कादम्बरी तु केवलं गद्यमत्र तु प्रवृद्धश्रृङ्गाररसस्यन्दिनः श्लोकाः अपि बहवः सन्ति । छन्दोविरचने च कविः स्वच्छन्दं प्रदर्शयति । बन्धस्तु न जटिलः अपि तु रससुधाझरः । शार्दूलविक्रीडित-मालिनी-स्वागता-वसन्ततिलक-गीत्याद्यैः छन्दोभिः कविः स्वकाव्यम् अलङ्करोति । नास्माकमभिप्रायस्त्वयं यदेतावतैव अयमपि कविः बाणभट्टसमकक्ष्यमारुरोहेति । केषुचिद्रसपूर्णेषु प्रदेशेषु कविः वर्णनातरङ्गनिमग्नः आत्मानमेव विस्मृत्य श्रृङ्गारस्य परां काष्ठां प्राप्तो वा अथवा वर्णनार्णवनिमग्नः सुस्पष्टं सः आदिमरसराज एवाभूदपि इति तु काव्यसौन्दर्यदार्शनिकैः विद्वद्भिरेव सुचिरं चिन्तनीयं भवेत् ।

**कविः :**

कः अस्य लीलावतीसन्देशकाव्यस्य कविरिति प्रश्नस्तु सहज एव । यतोऽत्र काव्ये कुत्रापि कर्तुः नाम्नः सूचनमेव नास्ति । मधुरोष्ठीसन्देशनाम्नः काव्यस्य अस्य च शैलीपरिशीलनेन इदं सुस्पष्टं भवति यत् उभयोरपि कर्ता एक एव स्यादिति । मधुरोष्ठीसन्देशस्य अन्ते -

> गङ्गाधरकविरचितः श्रृङ्गाररसैधमानपरभागः ।
> सन्देशोऽयं सरलः कन्दलयतु नन्दनन्दनामोदम् ।।

इति दृश्यमानेन पद्येन एतदवगम्यते यदस्य मधुरोष्ठीसन्देशकाव्यस्य कर्ता गङ्गाधरनामा । परन्तु एतत्सदृशशैलीभाजः लीलावतीसन्देशकाव्यस्यान्ते

कर्तुः नामनिर्देशनात्मकं पद्यं किमपि न पश्यामः । अस्य काव्यस्य शैल्याः, लीलावतीसन्देशकाव्यस्य शैल्याश्च परिशीलनेन लीलावतीसन्देशस्य कर्ताऽपि गङ्गाधर एवेति शङ्कितुं शक्यते । मद्रकन्यापरिणयचम्पूः इति चम्पूकाव्यमेकमनेनैव कृतमिति सुविदितमेव ।

एषु त्रिष्वपि काव्येषु साम्यपदपुञ्जप्रयोगाः बहवस्सन्ति । तत्र प्रयुक्तान् कांश्चन पदगुम्फान् अत्र दर्शयामः ।

| लीलावतीसन्देशः | मधुरोष्ठीसन्देशः | मद्रकन्यापरिणयः |
|---|---|---|
| वक्षः प्राङ्कणकूल | चेतः प्राङ्कणसौध | - |
| नासायाम् आसेचनकतां | लोचनासेचनकरामणीयकं | - |
| लवलीकोमलतनु | लवलीपल्लवकोमलेन | - |
| पटीरगिरिमेखलाखेल | पटीरगिरितटीप्रेङ्खदनिल | |
| प्रणयरसैकपेशलाश्रवणानन्द | प्रकृतिपेशलामनुसन्धाय | - |
| सम्भारसमालोकनाटीकमान | - | संभ्रमसमाटीकमानकमल |
| मदोदयरिङ्खमाणकुसुमन्धय | - | कल्याणापाङ्गरिङ्खद्युति |
| विच्छुरणसान्द्रलौहित्य | विच्छुरणनिःश्रेयस | - |
| मेचकरुचिर्वीचिकापाटच्चरेण | - | सुषुमासौभाग्यपाटच्चरः |
| लावण्यप्रभापिचण्डिल | - | |
| मधुरसपरिमललहरीपिचण्डिल | | |
| - | वण्टलुण्टक | निशाचरचण्डलुण्टाक |

अत्र निर्दिष्टानां साम्यपदानां परिशीलनेन तथा शैलीनां तुलनात् तिसृणां कृतीनां कर्ता एक एव सोऽस्ति गङ्गाधर इति सिद्धान्तयितुं शक्यम्।

अतः मधुरोष्ठीसन्देश-मद्रकन्यापरिणयकाव्ययोः कर्ता गङ्गाधरकविरेव लीलावतीसन्देशकाव्यस्यापि कर्ता इति निस्सन्दिग्धोंऽशः ।

गङ्गाधरकविः स्वविरचितेषु कृतिषु साम्यपदानां तत्र तत्र यथाभिरुचि सन्दर्भानुसारेण उपयोगमकार्षीत् । सर्वासां कृतीनां कर्त्रैक्यप्रतिपादनेन अयमेको हेतुः ।

गङ्गाधरकविः काव्यमध्ये स्ववृत्तान्तं कुत्रापि न उक्तवान् । मद्रकन्या-परिणयस्य प्रथमोल्लास्यान्ते "इति श्रीमदुदयकुलकलशजलनिधिचन्द्रमसः पण्डितमण्डलीमान्यस्य दत्तायत्रेयविपश्चिस्सुगृहीतनाम्नः तनयेन गङ्गाधर-कविना विरचिते मद्रकन्यापरिणये प्रथमरसोल्लासे पूर्णः प्रथमोल्लासः" इति कर्तृनामसूचिका पुष्पिका दृश्यते । सः कुत्रत्यः कस्मिन् वा शतके जनिमाप कियन्तं वा कालं जीवितेन व्यनैषीत् इत्यादिकं तु कुतोऽपि न ज्ञायते ।

## ग्रन्थसम्पादनविषयः :

अस्माकं संस्थायां लीलावतीसन्देशकाव्यस्य द्वौ ग्रन्थौ उपलब्धौ स्तः । तालपत्रप्रतिः सा मातृका । अन्या कर्गजप्रतिः । इयं कर्गजप्रतिः तालपत्राणामेव प्रतिलिपिरूपा । तयोः विवरणं एवं विद्यते ।

| | ग्रन्थसं | परिमाणं | पत्रसं | पंक्तयः | अक्षराणि | लिपिः | मितिः | विशेपः | सम्पादनार्थं कृतं संज्ञा |
|---|---|---|---|---|---|---|---|---|---|
| तालप्रतिः | P.3786 | 41x4 cms | 9a-17a | 7 | 45 | तेलुगु | समग्रा | क्रिमिदप्टा | क |
| कर्गजप्रतिः | B.1058 | 17x21 cms | 1-19a | 16 | 19 | दे.ना. | समग्रा | - | ख |

एतद्ग्रन्थसम्पादनकार्ये समुचितमार्गदशकिभ्यः निर्देशकेभ्यः डा. के.आर्. राजगोपालाचार्यमहाभागेभ्यः तथा अस्माकं संस्थायाः उपनिर्देशकेभ्यः

विद्वद्भ्यः आर्.जि.माळगि इत्येभ्यश्च कृतज्ञतां सूचयामि । एतद्ग्रन्थ-सम्पादनकाले सम्पादनोपयोगिषु समुचितपाठस्वीकारादिकर्मसु विशिष्टं साहाय्यं कृतवद्भ्यः अस्मत्संस्थायाः ज्येष्ठसहायकसंशोधकेभ्यः श्रीमद्भ्यः शङ्करगणपति फाटक् महोदयेभ्यः विशेषतः कृतज्ञतां सूचयामि ।

नातिमहतस्तथापि रसवतोऽस्य ग्रन्थस्य स्वीकारेण विद्वांसः मम यत्नं सफलयन्तु । सुरभारती च विद्वत्करकमलला लिता नितरां वर्धतामिति आशास्ये ।

इति विद्वज्जनविधेया

**बि.ममता**

गङ्गाधरकविरचितः

# लीलावतीसन्देशः

(सखीद्वारं श्रीकृष्णं प्रति लीलावतीकर्तृकं सन्देशप्रेपणम्)

निस्सीमोदयमानयौवनवती लीलावती कामतो
नित्योज्जृम्भददम्भकुम्भकुचसंश्लेषं चिरं तन्वती ।
❇आढ्यंभावुक! तावकीनकुशलं पृष्ट्वाऽगादीय्यद्
भवान् गोपीजार ! विदांकरोतु सरसं त♦द्वाचिकं सादरम् ।।
।। 1 ।।✡

जातु त्वं रचयाव इत्यभिवदन् ❁जायापतिक्रीडनं
कृष्णानुद्गतयौवनमृजुधियं प्राणेश ! मामस्पृशः ।
वक्षः प्राङ्कणकूलमुद्गजकुचं ❖पौष्पेषु[1]लीलास्पदं
शृङ्गारैकनिकेतनं समभवं तारुण्यमासादिता ।। 2 ।।

---

❇ श्रीमान् इत्यर्थः ।

♦ सन्देशवाक् वाचिकम् इति । लीलावती स्वसख्या साकं कृष्णं प्रति सन्देशं प्रेपयामास इति अस्मिन् पद्ये वर्ण्यते ।

✡ वस्तुनिर्देशरूपो मङ्गलश्लोकः । शार्दूलविक्रीडितं छन्दः ।

❁ प्रायः शैशवे क्रीडासमये बालकाः वालिकाश्च नानाविधक्रीडामध्ये विवाहरूपक्रीडनमपि कुर्वन्ति । परम्परागतक्रीडनम् एतत् सर्वत्रापि वहु प्रसिद्धम् ।

❖ मन्मथ इति ।

---

1. पार्श्वेपु – क

*तदनु चिराय सहपांसुक्रीडनकृत*संस्तवोऽपि, ❖सजग्धिकेलि-कालालितोऽपि ❖सपीतिसमुचितोऽपि, सन्ततालापशीलोऽपि, समानैका-वासशयनासनसुखितोऽपि, समवयस्कोऽपि, सहवर्धमानोऽपि, सततममुक्त-पार्श्वोऽपि, नित्यानुधावननिरतोऽपि, क्षणवियोगविधुरोऽपि, निराकृतेतर-बालिकासंकथोऽपि चिरावगतेङ्गिताकारोऽपि, सखीजनः युगपदाविर्भूततरुणि-माटोपसमेधितलावण्यप्रभा❁पिचण्डिल प्रतीकनिश्शेषनिराकृतकन्यका-चिह्नाम्, अदृष्टपूर्वामिव तामेव मामन्यां मन्यमानो वदनमन्योन्यमीक्ष्यमाणः क्षणादीक्षणयोः क्षणमक्षीणमुदञ्चयति हरिणाक्षी ♦क्वत्येयमत्यादित्यसुन्द-रीरूपसम्पदिति विसिस्मिये ।

तत्र परेङ्गितज्ञानकुशला मेधाविनी नाम वरीयसी वचसा वयसा समधिका निध्याय ♦सध्रीची काचिदहो । महदिदमद्भुतस्थानमपरिपाल्य लोक-मर्यादामसम्प्रतीक्ष्य वयः क्रमचर्यामपहाय पर्यायोपचयशालितामवयवानां शैशवराज्यसीमानन्तरतया विपक्षतामध्यक्षयन्नेकोत्पातेन ✡सिन्धुरिवांधुं मज्जयन् बालभावमरुण इव तमो निष्कासयन्नुदितस्सकलेन मण्डलेन ✪सुधा-

---

* तारुण्यप्राप्त्यनन्तरमेव ।

* संस्तव अतिपरिचयः ।

❖ सजग्धिः समानं भोजनं ; सप्रीतिः समानं पानं अतिपरिचितोऽपि पुरा तया साकं क्रीडन्नपि सखीजनः लीलावत्याः अतिशययौवनलावण्यं दृष्ट्वा अतीव विस्मित इत्यत्र वर्ण्यते ।

❁ पिचण्डिलः तुन्दिलः । अत्र परिपूर्णमित्यर्थः ।

♦ कुत्रत्येत्यर्थः ।

♦ सध्रीची विश्वासार्हा सखी ।

✡ अन्धुः कूप इत्यर्थः । सिन्धुः अन्धुमिव यौवनं बाल्यं न्यमज्जयन् । सर्वत्रापि पूर्वावस्था यौवनान्तर्गता सञ्जाता इत्यवधेयम् ।

✪ सुधासूतिः चन्द्रः ।

सूतिरिव / कमलिनीमामीलयन्, *कुम्भीडिम्भ इवाम्भोधिमशेषमाचामन्, कुतो वाऽकस्मादुपारूढः कठोरतामादेश इवागतस्तरुणभावः स्थास्नुतामूरीकरोति मुग्धतापदे ।

अनन्यजपाल्यतया यौवनस्य स्वाधिकारमशून्ययन् अस्याः वपुषि ❊सौदामिनीमदभिदेलिमतां, कबरे ❖निबरीसताम्, अलके कुटिलताम्, अपाङ्गे ❁चतुलताम् अक्ष्णोर्विपुलतां, दृशि दर्शनीयताम्, अधरे मधुरतां, कपोले कामनीयतां, कर्णे वर्णनीयतां, नासायाम् ♦आसेचनकतां, आलापे चाकलनीयतां सुस्मिते विस्मयनीयतां, चुबुके चुम्बनीयतां, निःश्वसने ♦विश्वजनीनतां, कण्ठे समुत्कण्ठनीयताम्, अंसे मांसलतां, भुजे भजनीयतां, हस्ते ✡प्रस्तव्यतां, नखे श्लाघनीयतां, वक्षसि सुलक्षणलक्ष्यतां, कुचकुम्भे परिरम्भणीयतां चूचुके मेचकिताम् उदरेऽप्यणूदरतां मध्येऽप्य☉ध्येयतां, नाभ्यामभ्यादरणीयतां, नितम्बबिम्बेऽतिसम्भावनीयतां, जघने ❊मनोजघनताम्, ऊरावपि रम्भोरुश्रीकतां, जानुन्यजातोपमतां, ~प्रसृतयोः प्रसरद-

---

* कुम्भीडिम्भः अगस्त्यः ।

❊ प्रपञ्चे स्थितानां वस्तूनां धर्माः तस्याः (लीलावत्याः) वपुषि सन्तीति कविः वर्णयति।

❖ निबरीसः निबिडः ।

❁ चटुलता चञ्चलता ।

♦ आसेचनकं यस्य वस्तुनः दर्शनेन दृङ्मनसोस्तृप्तिर्न लभ्यते तत् आसेचनकम् ।

♦ विश्वजनीनतां सर्वजनसन्तोपजनकताम् ।

✡ प्रस्तव्यतां विशिप्टस्तोत्रपात्रताम् ।

☉ ध्येयं ध्यातुं योग्यं साकारमेव तत् । अस्याः मध्यं तु निराकारं ब्रह्म इव शून्यम् । अत एव अध्येयम् । अथवा अध्येतुं योग्यं मध्यम् अस्ति वा न वेति पुनः पुनः परिशीलनार्हम् ।

❊ मन्मथस्य दार्ढ्यम् ।

~ प्रसृता जङ्घा ।

र्चिष्मत्तां, चरणे युवशरणीयतां गमने रमणीयतां च गमयन्मनसिजोऽपि निखिलेष्व*पघनेषु कृतसन्निधानो जागर्ति । यदेयमभिनवयौवनाटोपलोभनीय प्रचुरलावण्यलहरीलिह्यमानलवलीकोमलतनुपुष्कलसौभाग्यसन्तानितजननयननवातिथ्या समजनि *तदैव रसिकजनहृदयहारिणो रतिराज*शतायुतावतारैकनिकेतनाः *प्रथमरसप्रताप*धौरेयाः प्रति*कलविकसन् मदनमद*मेदस्विनः बहुलभङ्गि*महितोल्लासा विलासाः प्रादुरासन् ।

तारुण्यविलासौ अविरहितौ स्वयं समकृतप्रादुर्भावौ सुमसौरभिमैत्रीं मकरन्दमाधुर्यसौजन्यं, वागर्थदाम्पत्यं तिलतैलसौहृदं, दीपप्रभाऽविनाभावं, चन्द्रचन्द्रिकाचातुरीं जलतरङ्गसाङ्गत्यं, हिम*जडिमनैयत्यं च व्याकुर्वाते । अम्बुजोदरशाबररिपुशताधिकेन भवता जगदेकमोहनाय काचिदियमुत्पादिता शाम्बरीति मन्ये ।

अथवा किल *पुरावतारे पदसरसिजपरागकणिका तावकीनशिलामपि सीमन्तिनीमातनानेत्यवगतमैतिहासिकात्करतललालितेयमीदृशीति नातिविस्मयपदम् ।

---

* अपघनेषु अङ्गेषु, देहावयवेषु ।
* नूतनयौवनप्राप्त्यनन्तरमेव ।
* शतायुतशब्दः असङ्ख्यार्थे योजनीयः ।
* प्रथमरसः शृङ्गाररसः ।
* धौरेयः धुरं वहन्तीति ।
* कलः मधुरो ध्वनिः ।
* मेदस्विनः मेदः अस्य अस्तीति ।
* महितः प्रसिद्धः ।
* जडिमा जडस्य भावः शैत्यम् ।
* रामावतारे रामस्य पदसरसिजपरागकणिकास्पर्शात् शिलाभूतापि अहल्या उज्जीविता बभूव । लीलावती तु बाल्य एव कृष्णस्य करतललालिता सती अतिशयलावण्यव

यदेयमुत्पलिनीव निशाकामुकस्य कमलिनीव पद्मिनीवल्लभस्य, ◆पटीर-गिरिमेखलाखेलनोल्लासिनी, मरुल्लहरिकेव वसन्तस्य, भवतस्सन्निधानेन पुष्कलामभूतपूर्वामनुकलसमेधमानां श्रियमाबिभ्रती हर्षविशेष ✡विकच-लोचनापाङ्गमेचकमरीचिवीचिकया भवद❁भिसरणानुकूलिनीं सद्यस्तम-स्विनीमिव निर्ममाणा निस्सीमकौतुकविकसदाननसरोजनिस्सरदमलमकरन्द-धारासन्देहापादिनीं भव❖दुदारापाङ्गदुग्धजलनिधिवेणिकामुद्वेलप्रसरदुरु-कल्लोलमालिनीम् आतन्वती, सान्ध्यरागानुबन्धां शारदीमिव चन्द्रिकामधर-पाटलप्रभापरिगतां स्मितमयूखरेखिकां, तावकविलासहासपरिचयोल्लासि-नीमुद्वहन्तीम्, अनवरतप्रवृत्तेन विद्युद्दामधामपिशङ्गेन द्रुतकनकद्रवधारापूर-पिचण्डिलमापादयता रोदसीकुहरमध्यकरण्डतानवेन महसा महीयसा सद्यो रहःप्रणयपरिणयमङ्गलोचितं हारिद्रवसनमभिनवमादिमरसावताराय भवते पीतवसनायेव वितरन्ती निर्व्याजमानङ्गमदातिरेचितनिश्वासपवनावधूतमृदु-लपटीमपि पयोधरतटीं निरुपमाधरनिर्यदनूनपाटलप्रभया परितो विसा-रिण्या निरन्तरानुगत♦कौसुम्भचेलनिचोलितां कुर्वाणा नरामरतरुणीनयन-

---

बभूवेति अस्मिन् विषये विस्मयः मा भूदिति आत्मानं पूर्णानुग्रहपात्रं मन्यमाना ब्रवीति ।

◆ पटीरगिरिः मलयपर्वतः ।

✡ विकचं विवासितम् ।

❁ अभिसरणं च अष्टविधनायिकानां मध्ये एकस्याः कार्यम् । या नायिका कान्तमुद्दिश्य अभिसरति साऽभिसारिका । तस्या अभिसरणकारीणि चन्द्रोदयः वर्षा इत्यादिकाः विघ्नपरम्पराः तमस्तु तत्रोपयोगि ।

❖ उदारं भव्यम् ।

♦ कौसुम्भ कौसुम्भस्य राग इव रागः यस्य चेलस्थ तत् कौसुम्भचेलम् । रक्तवर्ण-वसनम् । चेलं वसनम् अंशुकं च निचोलाः - प्रच्छदपटः ।

लोभनीयाकृतिं सस्पृहमवलोकयन्ती भवता च सप्रणयविलासमीक्ष्यमाणा तत्क्षणोदंचदमन्द❖मन्दाक्षेण तिर्यगावलितवदना विदितेङ्गितां❋ चुम्बनाय कोमलकपोलमर्पयन्तीव सरस⊛नर्मगर्भवचनाकलनाय श्रवणं सावधानयन्तीव स्वच्छन्दविहाराय किलैकान्तताममभिलषन्ती परिसरवर्तिनः प्रकृता❆न्तराय-भूतानसमयवेदिनस्सखीजनान् साभ्यसूयमवलोकयन्तीव तावकी तनु*प्रति-मानग्रहणमीहमानेवाऽऽदर्शतलामलमात्मीयकपोलमभिमुखं दर्शयन्ती, तत्कालजृम्भितरोमाञ्चगोपनाय प्रतिबिम्बस्पर्शाभिलाषुकतया च मधूलिका-गन्धलुब्धमद~मेदुरमधुकर❁गरुदनिल✠वेल्लनविपर्यस्तकर्णाञ्चलनिहित-✧सौगन्धिकसुमसमविन्यासापदेशेनाच्छगण्डपाळिकामालम्बमाना करतलेन निखिल●जगदुदरम्भरिमात्मनो हृदयेन धारयन्ती, भवन्तमतिभारखिन्नेव निश्चलावयवतामाविभ्रती मायागृहीतमानुषजनिं रूपरेखाविभ्रमखनिमात्मे-शम् अन्तरनुसन्दधती निरन्तरानुसन्धानधारावाहिकनिरवद्यसुखसम्मूर्च्छितेवो-परतबहिरिन्द्रियव्यापारः मूर्तिमतो मकरकेतनस्येव भवतो विलासैर्हृदय-

---

❖ मन्दाक्षं लज्जा व्रीडा ।

❋ इङ्गितं मनसोऽभिप्रायः ।

⊛ नर्मगर्भवचनं ह्वासपूर्णवचनम् ।

❆ अन्तरायः विघ्नः ।

* प्रतिमानं प्रतिविम्वम् ।

~ मेदुरः सान्द्रस्निग्धः ।

❁ गरुत् पक्षः ।

✠ वेल्लनं परिभ्रमणम् ।

✧ सौगन्धिकसुमं सुगन्धयुक्तपुष्पं कल्हारपुष्पं वा । सौगन्धिकमिति सन्ध्याविकसित-शुक्लकमलस्य नाम ।

● उदरम्भरिः उदरं बिभर्ति इति उदरम्भरिः स्वोदरपूरकः । जगद्रूपम् उदरं बिभर्ति इति जगदुदरम्भरिः ।

हारिभिः [1]कन्दलिते [2]कन्दर्पानले समधिकतापेन समन्ततः स्विन्नैरवयवै'रग्नेराप' इति श्रुतिमनुगतार्थमावेदयन्ती कोककैरववैरिविलोचनस्य भवतः सव्यनयनपथिकतां परिहर्तुमिव द्विगुणितकञ्चुलीनिबिडनिबद्धामपि स्तनचक्रवाकयुगलीमीषदागलितेऽपि ❖[3]संव्यानाञ्चले साशङ्क[4]माच्छादयन्ती सत्वरम् अतिमानतया मदनज्वरस्य प्रमाणातिगमुखमारुतविप्रकीर्णो *घुसृणपरागैः कठिनपयोधरतटे तरुणीजन⊛शरारुपञ्चशरप्रहितकठोरशराघातोद्गत❉विसारिविस्फुलिङ्गानिव व्यञ्जयन्ती कामिनीयमनन्य*शरणा ज्योत्स्निकेव चन्द्रमसं, विद्युदिव बलाहकं, चन्द्रलेखेव शङ्कर❁कोटीरं, राजहंसीव मानसं ❃गगनशैवलिनीव हिमनगमेखलाभागं विद्रुमलतिकेव पयःपारावारं, चन्दनलतेव पटीरगिरिसानुं ✧भवन्तमन्तरार्हति नान्यमुपगन्तुमुदीक्षितुमनुसन्धातुं वा । तथा हि -

सकलभुवनजातप्रौढसम्पन्मुखेन्दोः
कुवलय●मतिवेलं नालमक्षिश्रियोऽस्याः ।

---

❖ संव्यानम् उरसः आच्छादनवस्त्रम् ।

* घुसृणं कुङ्कुमम् ।

⊛ शरारुः घातुकः क्रूरः ।

❉ विसारिविस्फुलिङ्गाः विसृमराः अग्निकणाः ।

* शरणं गृहरक्षित्रोः इति । अत्र रक्षकः इत्यर्थः ।

❁ कोटीरं जटाग्रम् ।

❃ गगनशैवलिनि स्वर्णदी ।

✧ भवन्तमन्तरा भवन्तं विना ।

● अतिवेलं भृशं अतिमात्रम् ।

---

1. कन्दलितेन - ख
2. कन्दर्पानलेन - ख
3. सव्यानाञ्चले - क
4. माबाधयन्ती - क

मदगतिरपि रम्या राजहंसैकनन्द्या

✠कलशजलधिकन्यामाल्यां ●लाल्या त्वयेयम् ।। 3 ।।⌘

इत्थंकारमाकलय्य नर्मसखीवचनं, ✧मेधाविनि सरससमाजमानसकैरवाह्लादकौमुदीप्रणयरसैक♦पेशला श्रवणानन्द✡विश्राणन❁वदान्यतरुलता प्रियजनवाञ्छानिर्वहणपटीयसी परा♦कूतख्यापनाख्यानरूपनिरतिशयकल्याणपरम्परीप्रसूतिशाला दुरन्तविचार✶खचितदूयमानहृदयतत्क्षणोल्लास❋सिद्धौषधिकलिका रसिकजनचातुर्यमाकन्दकन्दलीनिदानवासन्ततिभिः, तरुणिमविलासविपणिः ❖पञ्चशरपरमोपनिषद्गूढार्थविवेचन ❖पञ्चिका युवतरुणीरागानुबन्धसन्धानकरणी योषापुरुषस्वैरविहारानुकूलप्रतिभाप्रतिपादनदोहकसरणिः प्रथमरसकवाटविस्फुटनोपाय❂कुञ्चिका मुग्धजन-

---

✠ कलशजलधिः क्षीरोदधिः ।

● लाल्या लालनीया स्वीकरणीया च ।

⌘ मालिनीछन्दः ।

✧ सा लीलावती अब्रवीदिति अवधार्यम् ।

♦ पेशला दक्षा पटुः ।

✡ विश्राणनं दानम् ।

❁ वदान्यः दानशूरः वदान्यतरुः - कल्पतरुः ।

♦ आकूतः अभिप्रायः आशयः ।

✶ खचिता व्याप्ता संयुक्ता ।

❋ सिद्धौषधिकलिका सिद्धौषधिगुटिका ।

❖ मन्मथरूपपरमोपनिषदः यः गूढार्थः तस्य विवरणपञ्चिकेति वेदान्तार्थ विवरणपञ्चिकाः इव । पञ्चिका पदभञ्जिका । पदभङ्गपूर्वकः अर्थविवरणात्मको ग्रन्थः ।

❂ कुञ्चिका कीलिका ।

मौग्ध्य✠नीहारा●मिहिरप्रभा, कायजसाम्राज्यनिस्सीमविकसनाशीः तावकीना वचनपरिपाटी माध्वीकधारेव मधुकरवृन्दं जरीहरीति मानसमास्माकीन-परायत्तचेतसमेवमादेशकारिणमादेष्टुमविशङ्कं कारयितुमपि करणीयमि-दानीमसि त्वमेव स्वामिनी । नेदीयसि श्रेयसि महीयसि ⌘बालिशोऽपि को वा ✧प्रसव्यतामुपयाति ।

कालिन्दनन्दनयेव दीर्घतरनीलवेणिकासनाभयाऽनया प्रसृतायतलोचनया साकमेव यामो वनं यामुनं विहारायेति । ♆क्रमुककदलीनालिकेर✡नमे-रुतरुनिबिडच्छायाच्छन्नेन मृदुल❁वली लतावलितकामानान्तरितेन अन-वरतपतदमितकुसुमपरागपालिकासिकतिलेन पथा सनन्दतस्सन्ततनिरन्तर-वसन्तसमाक्रान्तकुसुमितलताशतपरिवृतफलिताम्रवणकलितललितलवङ्ग-लताकान्त◆निशान्ताभ्यन्तरक्रीडत्पिकशुक✶शारिकानिवहशावकानीक❋काक-लीकल❖निर्ह्लादभङ्गिका ✪प्रपञ्चितकर्ण❉सौहित्यम् अनारनागतमलय-

---

✠ नीहारः तुपारः हिमः ।

● मिहिरः सूर्यः ।

⌘ बालिशः - मूढः ।

✧ प्रसव्यतां - प्रतिकूलताम् ।

♆ क्रमुकः पूगः ।

✡ नमेरुः सुरपुन्नागवृक्षः ।

❁ लवली सस्यविशेषः ।

◆ निशान्तं गृहम् ।

✶ शाटिका मैना नामकः पक्षिविशेषः ।

❋ काकली सूक्ष्मो ध्वनिः । पक्षीणां किल किलरवः ।

❖ निर्ह्लाद शब्दः ।

✪ प्रपञ्चः विस्तारः ।

❉ सौहित्यं तृप्तिः ।

समीरसमीरितवीचिकाचयोञ्चलत्कुवलयकमल ◆ हल्लकक्षर[1] [दरुणरस] ✡ पृषतगन्धयुगम्बु ❁ शीकरलहरिकापरिष्वङ्गजातजडिमतीरवनीकनञ्जाम्बव-मध्यसीमबालरसालवीथिकान्तरबहुल ❖ बकुलासवसरणीपरिसरनिबरीस-♦ घनसारकदलिकावलयित * हिमकरोपलवेदिकासनाथ ❋ माधवीलता-पिहित ✿ कुञ्जकुटीसञ्जितसौरतसम्भारसमालोक ❆ नाटीकमानसुरसिद्धवास-कसञ्जिकाचिकुरबन्धसन्दानितमन्दारमालिकाऽऽमोदमहितयशः कथनवन्दि-वृन्दायमानमेदस्विमदोदयरिङ्खमाण कुसुमन्धयसमुदयमञ्जुगुञ्जितानुगाय-दासन्नपुन्नागसरणिकासदनकिन्नरमिथुनवरगानरसावेशदरांदोलितशिरस्सर-लपटीरतरुवाटिका ✥ वनत्पन्नगपल्लवाधरीमणिकिरण ● धोरणी ⌘ विच्छुरण-सान्द्रलौहित्यकपटपल्लवस्तबक[2]सन्तानितवनावलोकन ✧ विकूलकुतूहलकूज-

---

◆ हल्लकं रक्तकमलम् ।

✡ पृषतः विम्वः ।

❁ शीकरः अम्बुकणः ।

❖ वकुला केसरवृक्षः ।

♦ घनसारः कर्पूरः ।

* हिमकरोपलः चन्द्रकान्तशिला ।

❋ माधवी मल्लिका ।

✿ कुञ्चलतादिभिः पिहितविश्रान्तिगृहम् ।

❆ आटीकमानः टीकृ गतौ इति धातुः भ्रमन्तीनाम् इत्यर्थः ।

✥ वनत् वन गतौ धातुः । गच्छत् ।

● धोरणी परम्परा ।

⌘ विच्छुरणं चूर्णनम् ।

✧ विकूलं विगतं कूलं तीरं यस्य तत् विकूलं तीररहितम् ।

---

1. दरीक(?) - क, ख
2. सन्दानित - ख

त्कुहूवदनगलप्रणालिकागलदुदारनादसुधासेकदलितमानगदोन्मेषयुवतरुणी-स्वयंग्रहालिङ्गननिरवधिकसम्भ्रमाडम्बरनिस्सीमविकसदनङ्गसाम्राज्यमुपागम्य यमुनातीरवनोद्देशम् । सखि ! मेधाविनि ! दक्षिणतो वृक्षवाटिकामवगाह्य जानीहि कुतोऽतिविपञ्चीनिस्वनमाधुर्योऽयमाकर्ण्यते व्याहार इति तामन्यतः प्रस्थाप्य पचेलिमफलभारभुग्न❦विटपतरुवीरुदुपचितरामणीयक✡मारा-ममाविश्य निश्शलाकतां देशस्य निस्सखीसहायतात्मनश्चानुसन्धाय निर्वेल-लज्जाभयसम्भ्रमाविष्टां हरिणीमिव यूथभ्रष्टामितः ततो दत्तदृष्टिं मां, व्रीडा-वति । मानुसरान्वर्थतामभिधानस्य, कुसुमितलता❁वितानशतवितायमान-मण्डने कन्दलितेना❖बुध्नचूडं कंकेलिपादपेन स्वैरपरिणयोत्सवाय सन्धुक्षितेन महिमदाह्वयदहनज्वालकन्दलेनेव नन्दनीयशोभे परितः पवमानपात्यमानैः प्रसूनोच्चयैः हूयमानलाजाञ्जलिपुञ्जसामञ्जस्ये, वनदेवताभिः परितो विकीर्णैः पिष्टातचूर्णैरिव सर्वतः पात्यमानैः कुसुमरजोभिरपिरलबहुलपरिमलमिल-दवकाशे समुन्नतवदनैः प्रौढिमुपारूढैः चम्पककलिकाकलापैः प्रख्यपित-मङ्गलदीपिकाशतप्रकाशप्रागल्भ्ये सुमरस♦माकन्दकन्दलास्वादसुहितवाचाल-मधुव्रतपिककुलमदविरुतविकसदुद्दामनान्दीघोषसुभगं करेऽस्मिन् परिणय-मङ्गलमण्टपिका सब्रह्मचारिणिदेशे ।

---

❦ विरहशाखापल्लवसमुदायलक्षणम् आभोगः । तरुः वक्षः वीरुत् शाखादिभिः विस्तृता लता ।

✡ आरामः कृत्रिमवनम् ।

❁ वितानम् आतपादिनिवारणार्थम् उपरिबद्धस्य वाससः नाम ।

❖ वुध्नः वृक्षमूलात् ।

♦ माकन्दः आम्रवृक्षः ।

ताम्बूलीलतिकापरीत✧खपुरस्नेहक्रमं मल्लिका-
मन्दारहुद्रुमगूहनं च मिलनं खर्जूर⌘मृद्वीकयोः ।
एलावल्लिलवङ्गयोस्त्वमचितोर्दाम्पन्त्यमारण्ययोः
आलोक्य प्रमदे वनेऽपि विजने किं त्वं वृथा लज्जसे● ।। 4 ।।

कुतस्तवायं करो मुदुलपवनबालकचलितमनुसरति किसलयमाशोकमिति ✠पाणिगृहीतामारचय्य मेचकरुचिवीचिका❉पाटच्चरेण ❋कदर्थिताः कबर-भरेण तावकीनेन षट्चरणाश्चरणघातातिरेचितकुसुमरजः पालिकया पलितं भावुकतामीर्ष्ययेवापादयन्तीति वसनाञ्चलेन केशकलापकपोलपालिकां पक्ष्ममालिकां च परिमृजन् ❂चिकुराक्षि सन्ततजलान्तिकवास्तव्यतया वर्धितजडिम्नः ✶[1]निस्तलानि सुवर्णवर्ण♦कर्णेजपानि फलानि पृथुलानि सदृशवस्त्वन्तरशून्यानीति नि❖स्साध्वसलज्जमुपदर्शयतः पलाशिनो ❁दन्त-शठस्य अविष्कारय पुरतोऽनुकल❦पंपन्यमान कनकप्रभापिचण्डिलमनुत्तम-

✧ खपुरः पूगः ।
⌘ मृद्वीका द्राक्षा ।
● शार्दूलविक्रीडितं छन्दः ।
✠ पाणिगृहीति भार्यायाम् । पाणिगृहीता अन्या प्रेयसी ।
❉ पाटश्चरः - चोरः तस्करः ।
❋ कदर्थिताः - निरर्थकभूताः ।
❂ चिकुराक्षी - चञ्चलाक्षी ।
✶ निस्तलानि वर्तुलानि ।
♦ कर्णेजपः सूचकः ।
❖ साध्वसं भयम् ।
❁ दन्तशठः जम्बीरवृक्षः ।
❦ पंपन्यमानः पन स्तुतौ धातुः । अतिश्लाघ्यमान इत्यर्थः ।

1. निस्तुलानि - ख

वृत्तसम्पन्नमखिलनगमदविगमदं चिराय हृदयोपलालितं जम्बीरगाम्भीरि-मगलग्राहियुगलमुरोजयोरिदानीमपि प्रकाशनीये समये किमु निगूहस इति स्तननिचोलिकां विश्लथवेणिकां विरचय्य तावक कुचशाटिकाविधूननोद्गत-घुसृणपरागदूषितलोचनोऽहं समजनिषि निस्सारय वदनपवनफूत्कारेणेति मदभिमुखप्रसारितवदनस्य निकृतिमतेरकपटहृदया वचनमकृतकमनुसन्द-धाना मुकुलितानना निमीलितनयना भवदु✧पकण्ठं तथैवाचरितुं यावदहमभवं सज्जमाना ।

सव्यबाहुपरिवेष्टितकण्ठं
दक्षपाणिसुगृहीतकपोलम् ।
उन्नमय्य वदनं रतिबन्धो
मामकीनमधरं त्वमनंसीः ।। 5 ।।⌘

लावण्यसारघनतावकगात्रयोग-
निर्यन्त्रणोदितसुखाब्धिपरिप्लुतायाः ।
आनन्दमोहदृढमुद्रितलोचनायाः
स्रस्ता त्वया हि विधृता मम गात्रवल्ली ।। 6 ।।●

कामधुरोज्ज्वलमधरं
कामिनि ! कमनीयभावमाधत्ते ।
❋[पिकशु]कचञ्चुकोटी-
विक्षतपरिपाकशोणबिम्बस्य ।। 7 ।।

---

✧ उपकण्ठं समीपम् ।

⌘ स्वागता छन्दः ।

● वसन्ततिलकं छन्दः ।

❋ आर्यालक्षणप्रकारे पूर्वार्धे द्वादशमात्राः भवेयुः । अत्र त्रिमात्राः न्यूनाः अभवन् । अर्थदृष्ट्या 'पिकशुक' इति पदसंयोजनं कृत्वा मात्रात्रयं परिपूरितम् ।

अधरसुधारसधारा
मागलमरविन्दलोचने ♦धयतः ।
सुरतैकशंसनीयां-
प्रौहिं प्रकटयितुमथ मेऽवसरः ।। 8 ।।✡

इत्थमुदञ्चितां गिरमाकर्ण्य किलिकिञ्चितोदयकुञ्चितोद्यमां प्रसाद्य मां सद्यस्सरसवचनचातुरी❁शारद्य❖मनवधमात्मानस्समुद्योजयन् ।

बाहुस्वस्तिकमुद्रया कुचतटीमाच्छाद्यकोणीभव-
द्वक्त्रान्तर्वलिताधरानततनुश्शेषे किमङ्केऽद्य मे ।
चर्यां मेऽनुसरप्रियः किमु पटो मत्तो न किं त्यक्ष्यते
♦वैयात्यं भज वामतां त्यज रतिप्रागल्भ्यमभ्यस्यताम् ।। 9 ।।✲

मोचारसमुचा वाचा विद्राव्य द्रागधीरताम् ।
⊛धीरतां धीरतां यच्छन्नतनोरतनो रणण् ।। 10 ।।

ततः -

प्रेमावेशकृतेतरेतरपरिरम्भं विसृष्टांशुक-
श्लिष्टान्योन्यपृथूरूमूलमसकृद्दष्टाधरं चावयोः ।

---

♦ धयतः धेट् पाने धातुः । परस्मैपदि । शतृजन्तं षष्ठीरूपम् ।

✡ गीतिच्छन्दः ।

❁ विशारदस्य भावः वैशारद्यं पाण्डित्यम् ।

❖ अनवद्यं स्फुटं शुद्धम् ।

♦ वैयात्यं धैर्यं निर्लज्ञतां च । भज आप्नुहि ।

✲ शार्दूलविक्रीडतं छन्दः ।

⊛ धियि बुद्धौ रतां स्थितां प्राप्तां वा धीरतामिति प्रथमपदस्यार्थः । धैर्यमिति द्वितीयस्य ।

निस्सीमोदितसम्भ्रमं निरुपमानन्दैककोशीभव-
च्चक्षुर्व्रातमनन्यजातजनितं ❧जन्यं जयेच्छावतोः✡ ।। 11 ।।

ततः -

❁कुम्भीडिम्भकुटुम्बिनीचिकुरसंश्लेषातिनिर्हारिभिः
कल्लोलानिलशीत[लाबु]कणिका❖संवर्गणोदारकैः ।
श्रान्त्या घर्मपयः पृषन्निचितयोस्तत्रावयोर्मारुतैः
कालिन्दी श्रमचूषकैः प्रियसखीचर्यामतानीत्किल ।। 12 ।।

स्मारं स्मार♦[मुपेतकौतुकभरं] स्मारं तदानीन्तनं
वैयान्यं तिमितान्तरीयवसनं मे स्रंसते [1]मानद ।
❋एतर्हि त्वयि तादृशे श्वसिमि हा का.........
त्रातरि पुष्पबाणविशिखाघातं सहन्ती कथम् ।। 13 ।।

अर्धाङ्गीकृतमेकं स्मररिपुणा किल कलत्रयुग्मेऽपि ।
गोपसुताशतकान्त स्मर✪[सि न मा]मितीह किमु चित्रम् ।।14।।

---

❧ जन्यं युद्धम् ।

✡ बभूव इत्यर्थः ।

❁ कुम्भीडिम्भः कुम्भशिशुः अगस्त्यमुनिः तस्य कुटुम्बिनी भार्या लोपामुद्रा । चिकुरः केशः । नीर्हारीति दूरनिपातिनः गन्धद्रव्यस्य ।

❖ संवर्गणः आकर्षकः ।

♦ अत्र त्रुटितो भागः सर्वथा पठितुं न शक्यते । परन्तु तस्य पूरणम् एवं स्यादिति अस्माभिः पूरितोऽस्ति ।

❋ एतर्हि इदानीम् ।

✪ सि त मा इति पाठे संयोजिते सति युक्तमिति भाति ।

---

1. मनद - क

कमलविलासैकरसिक कामकलाकोविद भवति नात्र दोषलवोऽपि भवति। यतोऽहमाहरिष्यामि ते मुद ममित्त .......... यामि ......... यामि श्रेयो महदिति तादात्विकप्रलोभकवचनशतपरिपाटीं पथिक✧वधूटीमिव विश्लेष-भाज़ं गुड....प्रा..वन..य....पातितो...... लुब्धकगीतिमिव श्रावकमनोहारिणी-मुत्प्रेक्षकजनदुरवगाहां सिन्धु⌘............मिव सुदुस्तरामतिगम्भीरामुपरि-प्लवशीलतार्णकणिकेव मे मतिरकपटपटीयसी मन्दतरा तदा वस्तुतो नाजाना .......... र्वस्वापहारकमुरु..........कनानं श्रेयः पदवीदवीयोदुस्सहं ●रणरणक-मेव केवलमुत्पादितवता भवता तादृशालाप सरणिरन्येयमसन्दिग्धमभि[तः] प्रकाशिता ........... । अद्य मन्दभागधेयायाः हताशाया विधिदुर्विलास विलासमण्टपिकायाः चिरावगततावकसुरतसुखाया तथा विप्रलब्धमपि [निस्त्रप]मनन्यशरणं पुनः तादृशसुरभिसायककेलीपुष्कलसुखीयदविकलं श्रुतिनयनबा[ह]रसनं भवन्तमाकलयितुमालोकितुमालिङ्गितुमालापितुमा-स्वादयितुं च यतमानं न पारये निवारयितुम् ।

**✻सुरताभिला[षिणीं] मां**
**सुखबन्धो ! यदि न पासि दिप्टां ते ।**

---

✧ वधूटी युवतिः ।

⌘ बिन्द्वाङ्कितस्थले त्रीणि अक्षराणि त्रुटितानि इव भाति । तत्र अर्थदृष्ट्या 'वीचिका' इति शब्दोऽपि भवेत् । एतत्तु न निश्चप्रचं वक्तुं शक्नुमः ।

● रागरणकं - कुतूहलम् ।

✻ सुरताभिलाशपिणी कामकेलीम् इच्छन्तीति पूर्वत्र सामान्योऽर्थः । उत्तरत्र सुरताभिगामिता इत्यत्र सुराणां भावः समूहो वा सुरता इति अर्थसंयोजनेन सुरताभिगानिवा देवत्वं सम्पादनम् अनेन जन्मना मुक्तिश्च भवेदिति तया-भिलापितोऽर्थः प्रख्यापितो भवति । मरणमेव वरामिति श्रुत्वा श्रीकृष्णः कदाचिदागच्छेत्तूर्णमिति आन्तर्यम् ।

ध्यायन्त्याः तव मूर्तिं
मम किमु सुरताभिगामिता न स्यात् ।। 15 ।।

अनुचित[मुचि]तं वै तत्
प्रेम्णामर्थ्यादितीह स[न्दिष्टम्] ।
करुणावरुणालय मां
चरणादरणीयचेटिकां सुखय ।। 16 ।।

इत्थं निगध कृ[शपाण्ड]रगात्रयष्टि-
रानम्रखिन्नवदना तरुणी तवेयम् ।
नोवाच किञ्चिदथ गद्ग⌘[दिकानुशान्त]-
कण्ठी रमेश ! रमयाशुतरं वराकीम् ।। 17 ।।

*।। इति लीलावतीसन्देशस्समाप्तः ।।*

---

⌘ मूलमातृकायां 'गद्ग' इत्यनन्तरम् अक्षरचतुष्टयस्य अवकाशः क्रिमिभक्षितोऽस्ति । 'ख' मातृकायां लेखकैः 'गद्गदिकापरीत' इति संयोजनं कृतं न साधुः । यतः 'त' इत्यस्मादक्षरात्पूर्वम् अनुस्वारसूचकं चिह्नं मूलमातृकायां दृश्यते । अतः अस्माभिः 'गद्गदिकानुशान्त' इति सन्दर्भानुसारेण पाठः संयोजितः ।

## लीलावतीसन्देशस्य पद्यानुक्रमणिका

